# संस्कृत-वार्ता:

**दिनाङ्क: 15.12.2020**

**प्रातः - 06: 55**

**मुख्य-वार्ताः**

- प्रधानमन्त्री नरेन्द्र मोदी अन्तरिक्षक्षेत्रस्य मुख्योद्योग सम्बद्ध जनै: सह भाषमाण: न्यगादीत् यत् देशस्य प्रयास: अंतरिक्ष-कार्यक्रमाणां लाभ: निर्धन जनान् यावत् प्राप्येत इति वर्तते।
- कृषिमन्त्री नरेन्द्रसिंहतोमर: पुनरेकवारं सबलं अवादीत् यत् सर्वकार: कृषकै: सह वार्ता: कर्तुं सर्वथा सज्जो वर्तते।
- रक्षामंत्री राजनाथसिंह: प्रावोचत् यत् भारतं विश्वं नवीनविचारै: अग्रे नेतुम् चीनदेशात् उन्नतावस्थायाम् विद्यते।
- वित्तमन्त्रालयेन सप्तमसाप्ताहिकराशित्वेन षड्-सहस्र-कोटि रूप्यकाणि राज्येभ्य: जी.एस्.टी् क्षतिपूर्तिं पूरयितुं प्रदत्तानि।
- अपि च
- प्रधानमन्त्री नरेन्द्रमोदी बांग्लादेशस्य प्रधानमन्त्रि-शेखहसीनया सार्धम् आगामि- बृहस्पतिवासरे दृश्यश्रव्यप्रणाल्या सम्मेलनं विधास्यति।

**कोविड ओपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युद्ध्यते। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु

- **मुखावरंक सन्धारयन्तु –**
- **सामाजिकदौर्यं परिपालयन्तु,**
- **पाणिपादं च यथासमयं प्रक्षालयन्तु।**

**वार्ताः विस्तरणे**

**प्रधानमंत्री-स्पसे**

प्रधानमन्त्री नरेन्द्र मोदी न्यगादीत् यत् देशस्य प्रयास: अंतरिक्ष-कार्यक्रमाणां लाभ: निर्धन जनान् यावत् प्राप्येत इति वर्तते। प्रधानमन्त्री अन्तरिक्षक्षेत्रस्य मुख्योद्योग-सम्बद्धजनै: सह भाषमाण: आसीत्। श्रीमोदी प्रत्यपादयत् यत् नूनं शीघ्रमेव भारतं व्योम-विज्ञानसम्बद्धानां वस्तूनां निर्माणाय महत्वपूर्णं क्षेत्रं भविष्यति। केन्द्रीय मन्त्रिमण्डलेन अस्मिन् वर्षे जूनमासे निजी-क्षेत्राणां सहभागितायै अन्तरिक्षक्षेत्रं उद्घाटितम्।

**प्रधानमन्त्री कच्छ**

प्रधानमन्त्री नरेन्द्र मोदी अद्य कच्छ क्षेत्रस्य धोर्डोस्थानस्य यात्रां विधास्यति। प्रधानमन्त्री नैकेषां विकासकार्यक्रमाणां परियोजनानां च आधारशिलां संस्थापयिष्यति। एतासु परियोजनासु नवीकरणीयोर्जा-उद्यानं स्वचालित-दुग्ध संयत्रंप्रभृतय; परियोजनाः सन्ति।

गुजरातप्रदेश: समुद्रीय-जलस्य पानयोज्ञ जलरूपेण परिवर्तनक्रमे महान्ति कार्याणि करोति।

**तोमर: कृषकाश्च**

कृषिमन्त्री नरेन्द्रसिंहतोमर: पुनरेकवारं सबलं सर्वकारस्य कृषकै: सह वार्ताया: पक्ष: संस्थापित:। वार्ताहरै सह भाषमाण: श्रीतोमर: अवादीत् यत् सर्वकार: कृषकै: सह वार्ता: कर्तुं सर्वथा सज्जो वर्तते। यदि कृषकाणां पक्षत: परामर्शा: आगच्छन्ति चेत् सर्वकार: विचारं कर्तुं सर्वथा सन्नद्ध: अस्ति। ह्य: अखिल-भारतीय-कृषक सहयोग-दलेन विधेयकत्रयस्य समर्थने स्वकीयं लिखितपत्रं कृषिमन्त्रिणे समर्पितम्।

**राजनाथ – फिक्की**

रक्षामंत्री राजनाथसिंह: प्रावोचत् यत् भारतं चीनदेशात् विश्वं नवीनविचारै: अग्रे नेतुम् उन्नतावस्थायाम् विद्यते। श्री राजनाथसिंह: कोविड-नवदशप्रसंगे उक्तवान् यत् सर्वकारेण महामारीत: प्रभाविरीत्या निरोधार्थं भविष्यत्कालिका: पदक्षेपा: विहिता: सन्ति। अस्यां भीषणसंकटस्थितौ जनेभ्य: वित्तीय-सहायता, खाद्यसुरक्षाश्च सर्वकारेण प्रदत्ता:। फिक्की एनुअल कॉन्क्लेव इत्याख्यस्य सत्रं सम्बोधयता अमुना अत्मनिर्भर-भारतपुटके उद्घोषितस्यं विंशतिलक्षकोटिमितधनद्वारा निर्धनेभ्य: श्रमिकेभ्य: लघु-उद्यमशीलेभ्य विशेषसहायताया: उल्लेख कृत:।

**जीएसटी**

वित्तमन्त्रालयेन सप्तमसाप्ताहिकराशित्वेन षड्-सहस्र-कोटि रूप्यकाणि राज्येभ्य: जी.एस्.टी् क्षतिपूर्तिं पूरयितुं प्रदत्तानि। अस्मात् राशे: सार्धपञ्च-सहस्रकोटिरूप्यकाणि त्रयोविंशतिभ्य: राज्येभ्य: तथा च पञ्चशतं कोटि-रूप्यकाणि त्रिभ्य: केन्द्रशासित-प्रदेशेभ्य: प्रदत्तानि।

**प्रधानमन्त्री-शखि हसीना**

प्रधानमन्त्री नरेन्द्रमोदी बांग्लादेशस्य प्रधानमन्त्रि-शेखहसीनया सार्धं अस्य मासस्य सप्तदशे दिनांके दृश्यश्रव्यप्रणाल्या सम्मेलनं विधास्यति। उभौ नेतारौ उभयो: देशयोर्मध्ये सम्बद्धान् सहयोगं च दृढीकर्तुं विस्तृतचर्चा सम्पादयिष्यत:।

**यू के सचिवस्य भारत यात्रा**

यूनाइटेड-किंगडम इति देशस्य विदेश सचिव: डॉमिनिक रैब चतुर्दिवसीय भारतयात्रायां विद्यते। असौ स्वयात्रायां भारत-यूनाइटेड किंगडम-देशयो: परस्परहितसम्बद्धान् द्विपक्षीयां, क्षेत्रीयां, अन्ताराष्ट्रिय-प्रकरणानां च वार्तां अद्य नवदिल्ल्यां विदेश-मन्त्रिणा डॉ. सुब्रह्मण्यम् जयशंकरेण सह चर्चां विधास्यति, सममेव पर्यावरणमन्त्रिणा जावड़ेकरवर्येण, शिक्षामन्त्रिणा डॉ रमेश पोखरियालवर्येण च आधिकारिक-उपवेशनं करिष्यति।

**चाबहार**

चाबहार-जलपोतस्थानविषयकं सम्मेलनं ह्य: दृश्यश्रव्यप्रणाल्या अभवत्। अस्यां त्रिपक्षीयवार्तायां भारत-ईरान-उज्बेकिस्तान इति देशा: भागं गृहीतवन्त:। भारत पक्षत: केन्दीयसचिव संजीवरंजन: उज्बेकिस्तान डी.देहकानोव: तथा च ईरानस्य उप-परिवहनमन्त्री साहराम आदमनेजाद: सम्मेलने सहभागिताम् अकुर्वन्। अनया वार्तया व्यापारिण: व्यापरसमुदायाश्च लाभान्विता: भविष्यन्ति। उज्बेकिस्तान देशमतिरिच्य केन्द्रीय-एशिया देशा: अपि अस्यां स्वरुचिं प्रदर्शितवन्त:। विदेशमन्त्रिणा निगदितं यत् भारतं अन्यै: राष्ट्रै: साकं पारस्परिकं सुसम्बन्धं प्रदर्शयति।

**।। इति वार्ता: ।।**